# वेदान्तानुभूतिकारिका

# VEDANTANUBHUTIKARIKA

by

*Kali Kumar Mishra* M. A.

*Kavya-Vedantatirtha*
*Senior Teacher of Sanskrit,*
*Burdwan Municipal High School.*
*Examiner, Board of Secondary Education.*
*Adhyapak, Sanskrit-Siskha-Prasar,*
*Borehat, Burdwan.*



उत्सर्गः

संसारव्याधिजुष्टं श्रुतिवचनगुरु र्मां निरीक्ष्य मत्तम्
योऽविज्ञातस्वरूपं सततमकथयत् स्वात्मतत्त्वं यथार्थम्।
यस्माद् विद्येयमाशा विरचयितुमहं बोधहेतोः समर्थः
तत्स्मृत्यर्थं प्रणीतं चिरमभयपदेऽस्त्वर्पितं पुस्तकं मे ॥

गुरुम्
प्रति
ग्रन्थकारः।

—अभिमतम्—

ग्रन्थस्यास्यार्थविषयमहं सम्यगालोच्य मन्ये
वेदान्तानां यदयमपरः सर्व्वतत्त्वानि धत्ते।
वादान् भिन्नान् च ललितगिरा सोपपत्त्या छिनत्ति
जिज्ञासूनां सदवगतये यातु वेदान्तपाठ्यम्॥

इति

वर्द्धमान राजकीय त्रिजयचतुष्पाठीस्थ वेदान्तशास्त्राध्यापक
श्रीहरेन्द्रनाथ देवशर्म्मा निवेदयति।

# PREFACE

It is sheer externalism of the people and also inspiration from my venerable preceptor which have moved me to compose this little book of Vedanta-philosophy. A man can never get peace of mind through outward enchantments. They may allure human mind for a while but do not bear the test of real satisfaction. A man moves so far from his real soul, *which is pure consciousness, that he finds a bundle* of distress in his mind and does not understand what his real self is. It is non-realisation of his own proper self which causes his miseries. In this little book, I have mentioned various reasonings to remove this sort of ignorance. In consequence, the unknown proper self would be illuminated in its own light by constant deleberation on earnest query to know simple subjective consciousness. I have also put forth various reasonings to assert the pantheistic truth of the Vedantists by refuting contradictory views of other philosophers Immortal words of the Scripture are authentic proof to subside other philosophers and to strengthen the pantheistic veiw of the Vedanta in the emancipation of the finite soul.

# VEDANTANUBHUTIKARIKA

According to Vedanta this world is the illusion of the Brahman, the supreme being, and the Brahman alone is the truth. What appears as substantial viz., the objective world is nothing but an illusion of the supreme soul, as it stands on the supreme soul and has no seperate existence beyond it. Then again concerning simple, pure and subjective consciousness Vedanta says, there is no difference between finite and infinite being. This realisation of identity to a finite being is salvation which is the main problem of Vedenta where Vedic words are these

"अयमात्मा ब्रह्म" "तत्त्वमसि" "अहं ब्रह्मास्मीति"

The difference that we find exists in the particularity and that particularity cannot stand alone :

"वाचारम्भणं विकारं नामधेयम् मृत्तिकेत्येव सत्यम्" "नेह नानास्ति किञ्चन" "एकमेवाद्वितीयम्"

Therefore it is proved that every thing that we take as many exists only in name but not as a substance.

Substance is always one and the same. It never varies or changes, nor decays or perishes. So it is quite true that y one of us is substance not our varying states and

moods. " सर्व्वं खल्विदं ब्रह्म" A Scholastic thinker, properly equipped with sanskrit knowledge and having a keen interest in Vedanta philosophy will find more subtle discussions about it within the body of the book. So I wish not to speak more here about it.

In these days of Journalism finding no further issue of a book of this type, I feel the necessity of undertaking such an improbable task which scholars, I venture to have, will not fail to recognise and appreciate. The language of the book is sanskrit which is most simple and ordinary. It will create no terror to the mind which is accustomed to think in this line. Though it will not have a large number of readers yet I hope to get full sympathy from Pandits, Adhapakas and from the Heads of the Sanskrit learning in our country maintained by our Government. If they select it in the syllabus of the Vedanta-study and add a commentary to it, then my intellectual labour will reap its good harvest.

Lastly, thinking it my duty only to do some eternal good to human being, I have written this book and myself do not expect to have any honour or publicity on this account. That is the ideal of निष्कामकर्म्मयोगः instructed to Arjuna by lord Sri Krishna in भगवद्गीता। " कर्म्मण्येवाधिकारस्ते

मा फलेषु कदाचन" So it is left to my sensible readers, who I am sure, will do what is left undone. As a result, it was first taken by the Sanskrit Sahitya Parishad of Calcutta which had published it by part in various issues of its monthly Sanskrit Patrika for which I shall remain ever grateful to, it. Now being revised and collected in a book form I think it will remain ever on the services of man-kind.

THE AUTHOR.

# शुद्धिपत्रम्

| पृः नं | श्लोः नं | पाः नं | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| ३ | ९ | ४ | यत | यत् |
| ४ | १४ | ३ | पोरुपया | पोरुषेया |
| ७ | २४ | १ | मंत्यलोकं | मर्त्त्यलोकं |
| १५ | ५६ | १ | सर्व्वमुक्तिः प्रसङ्गः | सर्व्वमुक्तिप्रसङ्गः |
| १५ | ५८ | ३ | वैदान्तिकाम् | वैदान्तिकानाम् |
| २७ | १०६ | १ | सति विपयात् | सति हि विषयात् |
| ३९ | १५५ | २ | श्रष्ठ | श्रेष्ठ |
| ४६ | १८० | १ | सुविदितया | सुविदिततया |
| ४९ | १९५ | ४ | वुधानम् | वुधानाम् |

# वेदान्तानुभूतिकारिका

## ग्रन्थारम्भः

अज्ञानां वेदनायामपुरपि सवपुर्जायते मायया यत्
यस्मिंश्चाभासमानौ विषयविषयिनौ चिज्जडौ विश्वरूपौ ।
साकारं यत्र सत्यं भवभयशमनं त्वेकमेवाद्वितीयम्
देवादीनां यदग्र्यं पदमभयमजं चिन्मयं तन्नमामि ॥ १

सर्वास्थानं भवदपि पदं यत्त्वनाधारमेकम्
बह्वप्येकं सगुणमगुणं वाऽशरीरं शरीरे ।
भावाभावौ गमयति गुणौ यत् सदेकं विरुद्धौ
सत्यत्वेन ध्रुवमिहभवेज्ज्ञानमात्रं तथा तत् ॥ २

पूर्णं तद्धि स्वयमुदयते नो भवेत् कर्तृजन्यम्
यस्माद्भातं निखिलभुवनं तद्धियोन्मेपयेत् कः ।
तद्बोधे वै विमतिजननाद्वादिनां दृष्टिभेदात्
साक्षिज्ञानस्फुरितमनु तत् प्रोच्यतेऽतः सुधीभ्यः ॥ ३

कर्माकर्ता स्वयमकरणो दीक्षते केवलं यो
मायापेक्षं विभवति ततो दर्शनद्रष्टृदृश्यम् ।
आत्मा सोऽयं जगति रचिते वीक्षणात् साक्षिरूपः
निर्योगोऽपि स्फुरितनिखिलः शुद्धचैतन्यमेव ॥ ४

चैतन्यं यद् रविरिव समं द्योतते यत्र कर्तृ
शुद्धं पूर्णं परमधिकृतश्चोच्यते तद्धि साक्षि ।
तज्ज्ञानं वै बलवदसमं स्याद् विरोधेन नोचेत्
श्रुत्यात्तस्मादपरविमतिश्चागमैः खण्डनीया ॥ ५

प्रत्यक्षेण ग्रहणविषयान् केवलं वै प्रमेयान्
ये मन्यन्ते ननु कथमिहाकारएवात्महीनः ।
यः प्रत्यक्षं खलु तदधिकं नेन्द्रियैः संगृहीतम्
सीमाबद्धं सकलकरणं किं स्वरूपं मृषा स्यात् ॥ ६

कार्यैर्द्रव्यं भुवनमखिलं दृश्यरूपेण वेद्यम्
मायासृष्टं किमपि न भवेदिन्द्रियं यत् प्रमाणम् ।
स्थूलज्ञानं ननु मुनिजनाः क्लेशजातं तदाहुः
चित्तारामं कथमपि यतः साधु नाप्नोति जीवः ॥ ७

प्रत्यक्षेन स्फुरति न मतो कृत स्त्वशब्दप्रमाणम्
निर्दिष्टत्वात् तदधिकुरुते नैव विश्वं समग्रम् ।
प्रत्येत्यन्य च तदतिशयं द्रव्यमस्तीति सर्व्वः
प्रत्यक्षज्ञो विरमतु ततः सत्यतत्त्वानुभूतेः ॥ ८

प्रत्यक्षं न ज्ञापयति ह यत् सर्व्ववस्तुस्वरूपम्
किन्त्वेतद्धि प्रभवति वरं येन शब्दादिबोधे ।
नो तेनास्मादविषयगतं वस्तु किञ्चित् कथं वा
यत प्रत्यक्षं तदभिदधतां नाथ, वादः प्रमाणम् ॥ ९

कार्यं दृष्टवाऽनुमिति कुशलाः कर्तृदेवं विदन्ति
विस्मृत्येशं तमपि जटिले ये यतन्ते वितर्के ।
लिङ्गाभावात् परमपुरुषो हेतुभि र्नानुमेयः
तत्त्वं मुक्त्वा वचनरचना निष्फला तार्किकाणाम् ॥ १०

व्याप्तिज्ञानं त्विह न करणं स्याददृष्टार्थबोधे
दृष्टाभावे सहचरविधेः स्वश्रता कानुमातुः ।
साक्षाद्ब्रह्म त्वमसि वचनात्त्रोऽपाज्ञानमात्रम्
जीवोपाधौ व्यवहितकरं वै स्वरूपोपलब्धेः ॥ ११

व्याप्तिः पक्षोऽनुमितिषु तथा स्युः परामर्श आदौ
न प्रत्यक्षाग्रहि तत इह स्वमतिष्ठं प्रमाणम् ।
नानाह्वत्वादननुमितचित्र ज्ञापकं नानुमानम्
तस्मान्मानं कथमनुमिति र्ब्रह्मतत्त्वानुभूतौ ॥ १२

आत्मज्ञानं परमुपमया लभ्यते नापरोक्षम्
आत्मा सत्यः सकलमनृतं केन तुल्योऽप्यमेकः ।
आकाशादेः श्रुतिषु तुलना दीयते ब्रह्म सर्व्वम्
यज्ज्ञानार्थं चितउपहिताकार एकत्र कल्प्यः ॥ १३

स्वार्थाभावाद्विषयरहिते निर्गुणे निष्क्रिये वा
दुर्बोधे किं सति कलनया चिन्तया सेवया वा ।
भ्रान्त्याछिन्ना नरमतिरतोऽपौरुषेया श्रुति र्या
मोक्षज्ञानं समधु ददती केवलं प्रापनीया ॥ १४

कर्म्मज्ञाने श्रुतिषु विदिते द्वे नराणां विवेच्ये
कर्म्मत्यक्त्वा कथमिह वरं चक्षते ज्ञानमेके ।
यज्ञेनेति श्रुतिरनुभवात् कर्म्मणोऽस्तिप्रयोगः
चेतःशुद्ध्या इदमपिपुनर्याच्यते ज्ञानिना वै ॥ १५

कर्म्मार्थत्वं परमवगतन्तुप्रमाणं श्रुतीनाम्
आनर्थक्यं तदनवभृतां तेन मीमांसकानाम्।
कोऽकर्त्तव्ये स्वगतविषये वस्तुमात्रे यतेत
सर्व्वाम्नाया विधिपरतया युज्यमानास्ततः स्युः॥ १६

कार्य्याद्भिन्नं न विधिरहितं ब्रह्म किञ्चित् सतत्त्वम्
श्रोतव्यादिश्रुतिविधिपरं श्रूयते ब्रह्म यस्मात्।
स्वर्गादिःस्यादितिफलधिया कर्म्म कुर्व्वन्ति सर्व्वे
आम्नायानां तत उपनिषद्भाग एवार्थवादः॥ १७

धर्म्माधर्म्मौ श्रुतिविषयकौ चोदितौ द्वौ क्रियाया
जीवाः सर्व्वे क्षणमपिविना कर्म्म तिष्ठन्ति नात्र।
मोक्षः स्वर्गो न किमपि ततः कर्म्मणा वै स लभ्यः
इत्थं वादो ननु सुचलितोऽकारि मीमांसकेन॥ १८

वेदान्ती वः प्रथमपदवीमात्मनोऽत्र क्रियायाम्
नास्वीकारं जगति कुरुते बुद्धिभेदाज्जनानाम्।
इच्छा ज्ञातुं न भवति समा सम्विदासुक्तिदात्री
यद्ब्रह्मश्रुत्या परमनुभवे स्यात्ततो भूम्नि बाधः॥ १९

आत्मार्थं यै श्रुतिषु कथितं कर्म्म यागादि सर्व्वम्
आनर्थक्यं कथमुपनिषद् याति तं बोधयन्ती ।
नाविज्ञाते स्वगतविषये वस्तुमात्रेऽप्ययत्नः
दुःखोच्छेदो न भवति यतः कर्म्मणा केवलेन ॥ २० ॥

ज्ञानात्मानं रसमुपनिषद् मन्यते नार्थवादम्
श्रोतव्यादिश्रुतिरभिनवं ब्रह्म कर्त्तुं विधिः किम् ।
नित्यं ब्रह्म स्थितमथ विधिर्नेह कार्य्यं कुतो वा
कर्म्मग्राह्यं न तदिव यतश्च क्रियाः सन्ति सर्व्वाः ॥ २१

नापूर्वः स्याद् विधिरिह सतो ब्रह्मणोऽप्राप्तिमूलम्
अभासांशप्रजनकतया वास्य पूर्णात्मनोऽन्यः ।
नित्यप्रसक्ते नियमविधिर्नेतरप्राप्तिहानम्
नापेक्ष्या किमपि न यतः पारिसंख्यं विधानम् ॥ २२

स्वात्मत्वेन त्रिविधविरहितं ब्रह्म यन्नित्यमाप्तम्
एवंभावं ह्यविदिततया सन्न कर्म्मानपेक्षः ।
वेदान्तार्थः समवगमयन् निष्फलो नो परन्तु
सन्दिग्धार्थो जनयति पुनर्धीमतां च प्रवृत्तिम् २३

क्षीणे पुण्ये ननु दिविषदो मर्त्यलोकं विशन्ति
स्वर्गोऽनित्यस्तत् कथमथ भवेत् स्वर्गलाभो विमुक्तिः।
आपत्पाताच्चिरमपि सुखं स्वर्गिणां वा कथं स्यात्
मीमांसायां न भवति ततो मोक्षबोधो यथार्थम् ॥ २४

निष्कर्मात्मा न चिदनुभवं चोदनाभिः सुलभ्यः
कर्त्तुः कार्य्यात्तु विकृतिफलं जायते क्षीणपुण्यम्।
भेदात् कर्म्म प्रभवति कथं स्यादभेदेऽस्य योगः
कर्म्मत्यागात् प्रसरति ततो मुक्तये चिद्विचारः ॥ २५

कायः सर्व्वं खलु तदधिकं वस्तु किञ्चिन्न तत्त्वम्
आस्था प्रेत्य स्खलति च यतो जीवतीह शरीरे।
हित्वानन्दं स्थितमिह सुधीर्नेहतेऽमुत्र भूत्यै
चार्व्वाकाणां प्रचलितमतो मानवानां क्रियासु ॥ २६

आधारस्त्वं ननु जडतनोः केवलं कल्प्यतेऽतः
देहास्तित्वं यदि न पुरुषो भाति शून्यां धरायाम्।
भोग्ये वाञ्छां दधति चपलां नाशशीले भवन्तः
किं बुध्यन्ते न सति न जिते कर्म्म कर्त्तात्र जीवः ॥ २७

आदौ सत्त्वं कतिचिदणवः सप्रतिष्ठा बभूवुः
प्रध्मास्यन्तः प्रकृतिवशतो द्रव्यजातं सृजन्ति ।
चेतोजन्मापिभवति यथा गोमयाद् वृश्चिकादि
विश्वं जातं बहुभिरनुभि र्वस्तुवादी विवष्टे ॥ २८

प्रागुत्पत्ते स्तुचिदवगमाभेदमासीज्जडानु ।
दृष्टान्तो तेऽपि चिदनुगमो गोमये सूक्ष्मरूपः ।
यस्मात्त् कुत्रापि न चिदचितो जायते बोधसिद्धा
सृष्टे रीशा श्च कथमणवः सृज्जेद्भाः कर्तृ हीनाः ॥ २९

चेतन्याद्वा कथमथ मते ते जडश्चास्त विश्वम्
चैतन्यं प्रतिवदति चे घातुवादी प्रतीपम् ।
अण्वादिभ्यस्त्रिचतुरनुकं मानरूपं यथान्यत्
तद्वत् सृष्टिश्च जडजगतो ब्रह्मणो बाधते नो ॥ ३०

चैतन्यात्मा त्रिविधकरणा विद्यते बुद्धिरेका
बाह्यद्रव्यं परनियमितं नास्ति सत्त्वं जडत्वात् ।
काले स्वप्ने प्रभवति यतो धीः पदार्थानपेक्षा
तस्माद्बुद्धे रधिकिमपि नो चाह विज्ञानवादी ३१

बुद्धिर्भूय स्तनियततया ज्ञायते च प्रमाणम्
येनैकस्या नियतमपरा नो चिरं क्वापि वृत्तिः ।
यत् पूर्वं तद्धि परजनकं धीप्रवाहप्रमाणात्
वृत्तेर्भेद स्तु न विषयतो वासनाजन्य एव ॥ ३२

विज्ञानानामनुभविषु तत्तत्क्षणावस्थितेश्च
प्रत्यात्मानं गमयति तथा चैव सत्त्वस्वरूपम् ।
यत् सत्त्वं तन्मतिविजनितं वर्त्तमानार्थकारि
बौद्धास्तस्मात् क्षणिकमखिलं न स्थिरं किञ्चिदाहुः ॥ ३३

नाभावः स्याद्धिजदृजगतः खण्डबुद्धि विनैवम्
बुद्धिर्यस्मान्ननु पटयितुं किं घटः स्यात् समर्थो ।
जन्मान्धस्यास्तु यदि विषयाद्बुद्धिवृत्ति र्भवेन्नो
रूपस्पर्शो जगति न तथा बाधितो बुद्धिवादः ॥ ३४

योऽद्राक्षीत् स स्मरति च कथं प्रत्यभिज्ञाप्रमाणम्
कार्य्योत्पत्तौ क्षणिकसमये कारणस्यास्थितेश्च ।
न प्राग्वृत्तिः परविजननी स्याधिकारी स्थिरात्मा
कार्य्ये सत्त्वे स्पृहयति ततो न क्षणध्वंसवादः ॥ ३५

देहाधारं प्रति किमपि नो रुन्धुमीशा मनिर्या
यद्येवं नो तदपि किमपि स्यात् कथं वा प्रमाणम् ।
वृत्तीनाञ्च क्षणिकनियमेऽस्थायि सत्त्वं मते वः
नैतत् सत्यं नियतविषयो दृश्यते तद्विधायी ॥ ३६

द्रव्यं ध्वंसप्रवणमखिलं ज्ञायते युक्त्या सर्व्वैः
तस्माच्छून्यं भवतु भुवनं नः सुषुप्तिर्यथादौ ।
उत्पत्तेः प्रागसदवगतेः श्रुतौ मानमस्मिन्
आसीच्छून्यं जगदिदमतो मन्यते शून्यवादी ॥ ३७

नाशो मानं न भवति यतः सूक्ष्मसत्त्वावबोधात् ।
शून्यं तत्त्वं यदि किमसतः सम्मति स्यान्न सर्गः ।
ब्रह्मण्येवं तदसदभिधा नामरूपच्युतार्था
यद्येवं नो कथमसति वासीद्वचः सान्वयं स्यात् ॥ ३८

सोऽर्थः श्रुत्या मत उत कथं प्राक्सदुक्तिर्हि पश्चात्
चासत्प्रोक्ते जगत उदिता नात्र वै कल्पितार्थः ।
तेनात्यन्तं जगदिदमसच्छून्यरूपं न चाग्रे
नासत्तत्त्वं न सदुपरि वा शून्यवादो यथार्थः ॥ ३९

नानावृत्ति र्भवति मनसो योगविद्यासु हेतुः
मोक्षप्राप्तिः परपरिणतिस्तत्र योगावसानम् ।
भिन्नोपायाः शमदमपराः क्लेशहानौ संयुक्ताः
योगाभ्यासाच्च फलमहिमा कीर्त्तितो भूतिलाभः ४०

योगः प्रोक्तः प्रवरमुनिना चित्तवृत्तेर्निरोधः
रोधो नोचेद् विषयि न मनो वर्त्तते सत्स्वरूपे ।
योगैरङ्गैर्भवति हि मनः सुप्रसन्नं निरुद्धम्
तेनोयोगः परमपुरुषे योगिनोक्तः स मोक्षः ॥ ४१

नाहङ्कारो भवति विलयो योगमार्गेण सम्यक्
योगे कर्त्रा पथि सुचरिते कर्तृ नाशः कथं स्यात् ।
योगाद्भूति र्भवतु न ततो मुक्तिमाप्नोति विद्वान्
अष्टाङ्गानान्तु न भगवतः साधनायां विरोधः ॥ ४२

चित्तस्यैवं विलयविधिना दृश्यभूतस्य सत्यम्
नावस्थानं क्षणमपि भवेद्द्रष्टरि ज्ञानमात्रे ।
मोक्षो योगादिति तवमतेऽनित्यमुक्ति र्ध्रुवं स्यात्
अद्वैतेऽस्तो विकृतिरहिते द्वैतयोगोऽप्रमाणम् ॥ ४३

प्राणायामादिविरसतपः साधनं कायकृच्छ्रम्
सिद्धिस्तस्मादपि यदणिमादि नृणां जायतां वा।
कोऽर्थो नित्ये परमविषये तेन विघ्नस्तु मोक्षे
चिन्नित्यार्थः स ननु सरसं पूजितेऽस्तु प्रतीके ॥ ४४

निःस्वार्था धीर्हरिहरगता या स्थिरा भक्तिरुक्ता
ध्यानं सारं प्रणतिसहितं मूर्तिषु प्रेम तस्याम्।
भावावेशो विषयविरते जायते भक्तिभाजाम्
भक्त्या वश्यो भवति भगवान् येन भक्तेः परा का॥ ४५

एवं भक्तिः खलु सुविहिता साधनायां नराणाम्
यत्राविद्यास्थितिरवगता ध्यानभङ्गेऽसुखत्वात्।
सान्निध्यश्चेन्नरि भगवतः पूजयापि क्षणं तत्
द्वन्द्वं नित्यं प्रतिविषयो यत्र मुक्तेः रसः कः॥ ४६

यत्र द्वैतं प्रथत इतरश्चेतरं तत्र पश्येत्
भक्तावेवं सति पृथगथ स्वं ह्युपास्यं तथान्यम्।
पश्यन् भक्तः कथयथ तयोः स्वस्वरूपन्त्वजानन्
मोक्षानन्दं समरसतया ज्ञानरूपं लभेत ॥ ४७

स्नानाचामैः स्तनुरमलिना जायते किं न चेतः
यत्सम्बन्धो जगति सुदृढः संशये कारणं नो ।
श्रेयान धर्म्मः खलु मतिमतां स्यात् सदाचारनिष्ठा
नावश्या कुशलिभिरतः सा प्रशास्तु स्वभावम् ॥ ४८

बाह्याचारान् भवदभिमतान् स्तौतु देहाभिमानी
नान्यत्तत्त्वज्ञं यत उदितं सेवते तान् क विद्वान् ।
आत्मा पूतः स्वत इति कथं तत्र संस्कारकर्म्म
तत्त्वज्ञानां विचरणपथो वै न दृष्टो भवद्भिः ॥ ४९

द्वे तत्त्वे च प्रकृतिपुरुषौ स्तो विधानेऽथ सांख्ये
कर्म्मप्राणा प्रकृतिरमरा विश्वसृष्टेः प्रसूर्या ।
सैकानित्या त्रिगुणसहिता सत्त्वभूता जडापि
कार्य्यं कर्त्तुं ह्यजड्पुरुषं स्याद् विनैव समर्था ॥ ५०

कूटस्था ये तु बहुपुरुषा श्चेतना निष्क्रियाश्च
सौदासीन्यां अनुभवरसा निर्गुणा निर्विकारा ।
तेषामर्थं प्रकृतिरनिशं भोगमोक्षौ विधत्ते
शय्यादीनामिव मुनिदिता वृत्तिरस्याः परार्था ॥ ५१

एकं सांख्यं जगति तनुते विंशतिं पञ्च चार्थान्
सर्वज्ञ ञ्च त्रिभुवनकरं नेश्वरं स्वीकरोति।
धीरेका वै भृशमभिमता कर्म्मणां नात्र मानम्
मोक्षः पुंसः पृथगवगमः स्यादनादेः प्रकृत्याः ॥ ५२

सांख्यं तत्त्वं श्रुतिभिरपि च ज्ञापितत्वात् सुमान्यम्
प्राज्ञैः पुंभिः कथमगणितं साम्यभावं प्रधानम्।
अव्यक्तत्वादखिलजगतो यज्जडत्वात्तु योनिः
नेत्थं किञ्चिद् वदति कपिलः सांख्यकारोऽप्रमाणम् ॥ ५

सांख्योक्ता चेत् प्रकृतिरचितिः कर्म्म शक्ता विधातुम्
कस्मान्मृत्स्न स्वत इह घटं कुम्भकारं विनैवम्।
विश्वोत्पत्तेः प्रकृतिरथ नो हेतुरेका कदापि
यस्याः सत्ता पुरुषकलिता दृश्यते केवलं वै ॥ ५४

यद्भोक्तृत्वे सति नहि भवेदात्मकूटस्थतातः
भोक्तृत्वादिः पुरुषनियमो यस्त्वयोक्तः कथं स्यात्।
भोक्ता जीवः परमपुरुषो निर्गुण स्त्वेक एव
श्रुत्या बाधात् पुरुषबहुता तादृशी नापनीया ॥ ५५

एकस्मिन् चै सति च पुरुषे सर्व्वमुक्तिः प्रसङ्गः
कस्मिन् मुक्ते न भवति तथाज्ञानभेदान्नराणाम्।
यावद्द्वैताः प्रकृतिसहिता स्तावदीशोऽस्ति सत्यम्
नास्वीकारो वस्तु भगवतोऽ वैदिके च प्रधाने ॥ ५६ ।

द्वैतास्तित्वे सति तव मते विंशतिः पञ्च चैव
केनार्था वा न च तदधिकं किञ्चिदास्ते विभक्तम्।
वेदान्तेन व्यभिचरति नो वस्तुतन्त्रप्रधाने
सांख्यं मोक्षे न तु सममतं स्यात् प्रधाने स्वतन्त्रे ॥ ५७

सर्व्वज्ञात्मा त्रिभुवनपतिः कारणं स्यान्निमित्तम्
नोपादानं भवति जगतः पक्षपातित्वदोषात्।
सम्भोगाप्तेः कथमपि च तन्नास्ति वैदान्तिकाम्
चैतन्यत्वात् परमशरणं तार्किकाणां विधानम् ॥ ५८

उत सर्गेऽन्या मृदिव यदि च ब्रह्मणः स्यादपेक्षा
ना पूर्णत्वाद्भवति च तथाद्वैतसत्याच्छ्रुतीनाम्।
सर्व्वे जीवाः कृतिफलभुजः केन वैषम्यभोगौ
मायाकार्य्याज्जगत उभयं ब्रह्म नो कोऽपि दोषः ॥ ५९

वस्त्वद्वैतं यदि हि नियतं निश्चितं तद् विशिष्टम्
शुद्धं ज्ञानं नहि तदधिभृद् वासुदेवः परात्मा ।
जीवोपास्यः स खलु वरिता तं वरेण्यं वृणीते
मायाविद्या किमपि मनुते नो विशिष्टाद्वयीशः ६० ।

वैशिष्ट्यं यद् विगनय चितोऽद्वैतत स्तत् पृथक् किम्
नैतद् ग्राह्यं तदनृतमयं केवलं नामरूपम् ।
मायाविद्या सृजनविषये कल्पिता नात्र दोषः
भेदोक्ति नों समरसतया साधु रामानुजस्य ॥ ६१

जीवाजीवादय इह मताः सप्त जैनैः पदार्थाः
भेदा भूयो विवसननये नाम पञ्चास्तिकायाः ।
सार स्तेषामवतरति वै सप्तभङ्गी नयोऽत्र
रत्नत्रय्या तनुपरिमितः सेवते मोक्षमात्मा ॥ ६२

क प्रामाण्यं प्रतिविषयिनि ज्ञायते चास्तिनास्त्योः
जैनन्याये कथमपि जगत् किञ्च निर्धारितं नो ।
आत्मा पूर्णो वृहदनुगतो नास्य सङ्कोचवृद्धी
स्याज्जैनानां श्रुतिमतमते ज्ञानिनां नादरोऽतः ॥ ६३

वादिव्रातैः स्वमतकुशलैर्युक्तिमित्थं विधाय
वेदान्तात्मा निजकररुचा भासमानोऽपि साक्षात् ।
छन्नीभूतो जडपरधिया विस्मृतं श्वं स्वतो नः
निर्वाणाय प्रभवति कथं चेतसः शान्तयेऽसौ ॥ ६४

तेनाध्यासो जगति विदितोऽसम्भवं साधयन् यः
द्रष्टुर्दृश्यं पृथगपि मिथः शास्ति तादात्म्यभावम् ।
अज्ञानोत्थः सविविधकरस्तन्मतिः स्यादतस्मिन्
स्मृत्याकारस्तु परविषये पूर्वदृष्टावभासः ॥ ६५

यद्यन्नो तत्तदयनतया कल्प्यते वस्तु सत्यम्
सोऽध्यासः स्याद् भुवनजनको दृष्टनानाविरूपः
मिथ्यासत्ये मिथ उ मिथुनीकृत्य तेनास्य योगः
सत्तायास्तं प्रकटितगुणां वाह मायामविद्याम् ॥ ६६

अज्ञानाद्युद्धिजगदनृतं सत्यमाभाति देवे
रज्जौ सर्पभ्रममतिरिवाध्यास एवोच्यते तत् ।
मिथ्यारूपेऽस्ति भवजनके किञ्च तत्र प्रमाणम्
शुद्धे सत्त्वे श्रुतिमतवदुद्भासयेऽस्य प्रयोगः ॥ ६७

नाप्याध्यासो न च सदसतोर्वैक आसीदनादिः
ज्ञाते तत्त्वे स तु खकुसुमं नैव किञ्चित् करोति।
नानाकारं सति न विदिते स प्रपञ्चं प्रसूते
सोऽवक्तव्यो भवभयकरोऽध्यास एवात्ममाया ॥ ६८

सत्तामात्रे भुवनरचनां पण्डितोऽध्यासमाह
हृतै तज्ज्ञाने स च सुविहितो नेति नाशं कदाचित्।
सत्ये मिथ्यामतिरसति वा सत्यबुद्धिर्यतः सः
दुःखाक्षेप व्यवहृतिकरोभोक्तृभोग्येन्द्रियेषु ॥ ६९

काध्यासस्य स्थितिरवगता ब्रह्मणि ज्ञानमात्रे
या जीवानां भ्रमविजनिता दृश्यते दृश्यसत्त्वे।
तेनाध्यासो न खलु सुगमस्तत्र विश्वाकृतिश्च
नेदं सत्यं जगदथ भवेन्निष्फलः स प्रयासः ॥ ७०

मिथ्याभूता दधति विकृतिं रज्जुसर्पादयः किम्
येनाध्यासः सृजति पुरुषे बोधमात्रे विकारम्।
जीवाध्यासो भ्रमविरहिते सत्स्वरूपे च माभूत्
विश्वाकारा परमपुरुषे कल्पना भासतान्तु ॥ ७१

अध्यस्तत्वे भवति जगतः किं प्रमाणं सुलभ्यम्
सत्वं सत्वं वरमथभवेदस्य भावोपलब्धेः ।
स्वाविद्यायान्तु सदवभृतो दृश्यते यस्य भावः
तस्यास्तित्वं कथमविरतं स्यान्निजं सत्यबोधे ॥ ७२

यद्यध्यासो न भवति ततो वस्तु न स्याद्द्वितीयम्
नाप्रत्यक्षे तन्मलिनता दृश्यते व्योम्नि बालैः ।
नासम्भाव्यं सदनवगतौ स्यात् कुतोऽप्यस्य हेतौ
ऐक्येन स्यात् स च सदसतो र्मायिकत्वे तरास्त्वे ॥ ७३

सामञ्जस्यं खलु सदसतो रेवमध्यासमानम्
येनाविद्या किल बलवती सप्रमाणा गृहीता ।
तस्या जाता विषयबहुला निश्चितं मोहशोकाः
हानं तस्याः कथमथभवेत्तेन वेदान्तविद्या ॥ ७४

शान्तो दान्तः परमुपरतः पूतचेता विवेकी
जिज्ञासुर्यो विजितकरणः कामशून्यो मुमुक्षुः ।
तत्त्वं ध्याता यमनियमभृत्तिष्ठति ब्रह्मचारी
वेदान्तेषु क्षपिततमसः सोऽधिकारी विशिष्टः ॥ ७५

एवं धर्म्मो जगति लभते केवलं किं विमोक्षम्
श्रद्धावन्तः श्रुतिषु गुरुणा मानवा वोपदिष्टाः ।
चिन्ताशीला विनतमनस श्चेह संसारिणोऽपि
शास्त्रज्ञाने विचरणपरा वा स्त्रियोऽधि क्रियन्ते ॥ ७६

यस्मै कस्मै पथि विचरते चेज्जनायात्मविद्या
सं ब्रह्मासी त्यपि विकथिता न प्रसूते फलं तत् ।
हास्योद्रेकं जनयति वरं वाङ्मतो चोपदेष्टुः
वेदान्तानां गहनविषये चिन्त्यतेऽथाधिकारी ॥ ७७

तत्त्वज्ञा ये श्रुतिषु कुशला ब्रह्मनिष्ठा विमुक्ताः
आचार्यास्ते वचनपटवो ज्ञानवन्त श्च शान्ताः ।
शिष्याणां प्राक् प्रबलसुमतिं तत्त्वबोधाय बुद्धा
वैराग्यञ्चानुभवसहिता ब्रह्मविद्यां वदेयुः ॥ ७८

सत्यं ज्ञानं यदपि परमं ब्रह्म वेद्यं न लक्ष्यम्
सत्तामात्रे यत उपशमो लक्षणानां स्वतो वै ।
प्रख्याख्यातुं तदपि सुचिरं चेष्टते शास्त्रकारः
जिज्ञासूणां तदवगतये वेदसारै र्वचोभिः ॥ ७९

सत्यं ज्ञानं नियतममृतं ब्रह्म सन्मात्रमात्मा,
साहङ्कारं न यदथ परं सच्चिदानन्दरूपम् ।
एकं पूर्णं विकृतिरहितं यत् प्रकाशस्वभावम्
देवस्योक्तं त्रिभुवनभृतो लक्षणं तत् स्वरूपम् ॥८०

यस्माज्जातं खलुजगदिदं येन जातान्यनन्ति
यस्मिन् लीनं प्रलयसमये विश्वमेतत् ससत्त्वम् ।
एवं कोऽन्यः प्रभवति सतो ब्रह्म नूनं तदेव
अन्यल्लक्ष्यं स्फुरति कविषु ब्रह्मनो वै स्वकार्य्यात् ॥ ८१

अत्रं ब्रह्म प्रथममवधौ नेह नानास्ति किञ्चित्
सर्व्वा एवं श्रुतय उचिता ब्रह्मतात्पर्य्यवत्यः ।
श्रूयन्तेऽन्या ननु यदभिधाः शब्दजाः किं तु ताभिः
ब्रह्मन्येव प्रकरणविधिः सर्व्व वेदान्तवाचाम् ॥ ८२

श्रूयन्ते याः श्रुतय इतरा देवतोपासनायाम्,
आत्मन्येवं विलयविधयो भीतिरोधाय ये च ।
कर्म्मक्षीणाः श्रुतिषु बहुला यागवाचः सकामाः
या सर्व्वा स्ताः परिणतिपरा ब्रह्मणि मायका वा ॥ ८३

सत्यं ब्रह्म श्रुतिषु परमं यद्धि वाचा न वेद्यम्
बुद्ध्या नाप्यं बलिषु न बलं ज्योतिषा यत्र भातम्।
नित्यं शुद्धं गुणिषु न गुणं चेतनानां हि चेतः
द्रष्टृ वेदं सुखिषु न सुखं ज्ञाननन्दस्वरूपम् ॥ ८४

ब्रह्मानन्तं यदखिलगतं शुद्धमन्यत्र धर्म्मात्
सच्चाधर्म्मादपि यदपरं जानतां नानुभूतम्।
विज्ञातं यत् परमविदतां भूमरूपं तथाणोः
यच्चाणीयो विभु च महतो वा महीयोऽविनाशि ॥ ८५

ब्रह्माव्यक्तं परमविदिताद् वेदनाच्चा परं यत्।
ब्रह्माश्चर्य्यं नृषु न च नरो यच्च जीवेषु जीवः।
दूरं तिष्ठद् व्रजति चरते सर्व्वतो यच्छयानम्।
सर्व्वात्मा यत् समदममदं वा च कार्य्यं ह्यकार्य्यम् ॥ ८६

द्रव्यं सर्व्वं खलु च जगतां ब्रह्म यद्भावभावात्
जीवानां यन्मतिषु हि मति श्चक्षुषां चक्षुरात्मा।
सर्व्वानीष्टे यदपि च सदा ज्योतिषां ज्योतिरीशः
यद् दृश्यं वै भुवनमखिलं येन तेजांसि भान्ति ॥ ८७

सर्व्वं यस्मात् स्फुरति हि सति ब्रह्मणि भ्राजमाने
यत्स्थित्यां वै भवति विदितं यत्मयत्वाद् विनैवम् ।
ब्रह्मापूर्व्वं परमसदृशं साक्षि भोक्तृ प्वभोक्तृ
नो सामान्यो नयनविषयो यच्च कर्त्तृ प्वकर्त्तृ ॥ ८८

पूर्णं ब्रह्म प्रकृतममृतं देशकालै रच्छिन्नम्
चाखण्डात्मा विकरणमजं सर्व्वदोषाधिहीनम् ।
निष्कर्म्मापि प्रकृतिजनकं शाश्वतं तत् पुराणम्
नीरूपं सत् त्रिगुणरहितं चैकमेवाद्वितीयम् ॥ ८९

प्रत्यक्षानं श्रुतिषु विदितं चैवमाहुः परोक्षम्
किं तेन स्याद् यदि नरमति र्वेत्ति जीवं तदन्यम् ।
तद्भिन्नत्वं द्वयमतिकरं येन दुःखं ध्रुवं स्यात्
भेदाभावो नरभगवतोः कथ्यते ऽतोऽपरोक्षम् ॥ ९०

भेदाभावे श्रुतय उदिता स्तत्त्वमस्यादयो वै
याः सुस्पष्टाः खलु मतिमतां भेददुःखप्रणाशे
स्वाविद्याजः प्रभवति कथं तेन नित्यं विभेदः
तासां श्रेयो परमथ भवेज् ज्ञानजं हि प्रमाणम् ॥ ९१

द्वौ शब्दार्थौ द्विपदजनितौ तत्त्वमौ स्तो विभिन्नौ
खण्डोपाधौ गुणिनि घटते त्वं पदं भोक्तृजीवे।
आत्माखण्डः सततममना स्तत् पदे बोध्यते सः
भेदाभावः कथमथ तयो स्याद् विरोध्यर्थबोधात् ॥९२

जीवोपाधि र्न भवति विना सत् स्वरूपं स्वतो यः
नूनं मिथ्या स भवतु सदा यः स्वसत्ताविहीनः।
मिथ्योपाधि र्न किमपि सति त्वं स्वरूपे प्रकाशे
आत्माखण्ड स्त्वमथ न कथं यस्य मिथ्याविभेदः ॥९३

नाव्याप्तिः स्यात् कथमपि सतस्तत् कथं तद् विनोक्त्या
जीवाभावः सत उपरि चेज्जीव एवं विचारात्।
जीवं कृत्वा पृथगथ सतो दर्शयेवं तु न स्यात्
नो संमिश्रो न सदतिशय स्त्वेष जीवः सदेकः ॥९४

मिथ्यासक्ते रभिन्नक्तभाग् बोध्यते त्वं तदन्यः
वेदात्मानं हि तदवितथं जीव आचार्य्यवत्त्वे।
वाचारम्भा विकृतिरखिला मृत्तिकेत्येव सत्यम्
कार्य्ये जीवे प्रभवति सदा कारणाभिन्नमानम् ॥९५

शुद्धे सत्त्वे ननु भवति वा कल्पना जीव ईशः।
मिथ्यापाधे विलसति तयो र्व्यस्तकृत्स्नभेदः।
नासौ भेदः कथमपि यतः सत्स्वरूपं विनैवम्
एका सत्ता हि तत उभयोर्विद्यते निर्विशेषा ॥ ९६ ॥

तत्त्वाज्ञानाज्जगति मनुते जीव आत्मानमन्यम्
ब्रह्मासीति श्रुतिसुवचनाद् ब्रह्म वैचायमात्मा।
भूयोऽभेदप्रमितिजनकाचोपदेशाच्छ्रुतीनाम्
जीवो भिन्नः कथमपि न च ब्रह्मणो विश्वभूतात् ॥ ९७

सत्यं ब्रह्म क्षयभयहरं चेन्न जीवस्वरूपम्
मीमांसन्ते किमुपनिषदः सुष्ठु चाभेदतत्त्वम्।
तच्छिष्याणामसकृदपयः किं प्रबोधाय वाहुः
जीवास्तत्त्वे सति तु विदितेऽतो न देहादिमन्तः ॥९८

जीवाभिन्नाः स्वत इह यतः सन्ति चाज्ञानवन्तः
तत्त्वज्ञानं कथमिदमतः साधनं प्रापनीयम्।
रागाभावः क्षणिकविषये चात्मबोधे विचारः
द्वौ चोपायौ खलु सुविदितौ तत्त्वमेकत्वबुद्धौ ॥ ९९

व्याधिस्थानं नियतमहितं ह्रासवृद्धिस्वभावम्
चानित्यं तु ह्यवयवयुतं दुःखमूलं शरीरम् ।
यस्य स्तः वै जननमरणे नो वशं नास्ति यस्मिन्
तत्प्रीत्यालं यत इह सदा मोहदा मानसे सा ॥ १००

संसारा ये मधुरविमताः क्षेत्रपुत्रार्थकान्ताः
सम्बद्धा वै कतिपयदिनैर्नो गता वा न यान्ति ।
जीवानां ते सततमरयः कामपीडाकरत्वात्
श्रेयोऽस्त्वेभिः किमपि न भवेज्ज्ञानिनां बाधभूतैः ॥ १०१

सारं नॄणां करणजसुखं चेत् पशोः कोऽस्तिभेदः
नाहङ्कारोऽन्नवगतिरसः क्लेशहेतुर्हि काम्यः ।
येनानर्थक्षययुतफलं स्यात् सकामक्रियानाम्
कीर्त्तिं विद्या च बहु मनसो याचतेऽरिश्चनः किम् ॥ १०२

सर्वं भोग्याहरणविगमध्वंसरक्षासु दुःखम्
नातो विद्वान् श्रयति विषयान् स्वात्मनो दुःखहेतोः ।
आत्मा पूर्णोऽखिलगततयाप्राप्तिरस्त्यस्य किं या
अन्यप्रेप्सा तनुसुखकरे कायसम्बन्धिनां वै ॥ १०३

सम्बन्धो वै जगति वपुषा चेतनाचेतनानाम्
तेनैवास्ते निखिलविषये रागमूलं शरीरम् ।
जीवद्दृष्टश्च तदपि यदि ग्रस्यते मृत्युनैव
तत्सम्बद्धं सकलमपरं निश्चितं स्याद् विनाशि ॥ १०४

संसारेऽतो मरणमननं साधनं रागमुक्तेः
सूक्ष्मस्थूलस्वगतविषये सन्निधिध्यासनञ्च ।
त्यागाच्छान्ति र्भवति विभवानाममृतत्वस्य चाशा
तस्माज्जीवः परममभयं नाम निर्वेदमायात् ॥ १०४

चित्ते पूर्णे सति विषयाच्छान्तिमूले विरागे
मोक्षमार्गे प्रसरति ततश्चात्मसत्ये विचारः ।
शक्तिर्बुद्धे रयमिति नरैः केवलं गम्यते चेत्
मुक्तात्मानं कथमिह तयातो न संवेत्ति जीवः ॥ १०६

बाह्यज्ञानां जडविषयिनी धी र्न तेनात्र योग्या
आत्मैकाग्र्या श्रुतिषु सुमतिः तत्त्वबोधाय युङ्क्ते ।
सत्यात्मानं प्रति विविदिषो धीस्तु धत्ते विचारम्
सत्यं तत्त्वं विधरति तथा चागमाचार्य्यवाक्यम् ॥ १०७

ज्ञानाय स्तः श्रवणमनने साधने द्वे विचारे
वाक्यान्यादावबहितमनाः कर्णयेच्चोपदेष्टुः ।
तत्त्वं तेषां हृदिजनयितुं चिन्तयेद् वै यथार्थम्
वक्तव्योऽतो भवति सुगमः केन चिन्ताप्रकारः ॥ १०८

नाहं देही वसनमिव मे कांय इत्येकता क
पष्ठ्या भेदे भवति सुगमे केन देहात्मबोधः ।
कस्माद् वा स्याज्जडतनुरियं मेऽजडस्यप्रमाणम्
भ्रान्त्या मूढाःसमरसतया केवलं जानते तौ ॥ १०९

कायोऽनित्यः परनियमितो यः स्वसत्ताविहीनः
आत्मस्थित्यां व्यवहृतिकरः केवलं दृश्यते यः ।
मत्पक्षं वै जननमरणे यस्य नित्यं जनानाम्
सत्तामात्रं ननु कथमहं स्यां स एवाशरीरी ॥ ११०

माहं देही भवतु करणं मे स्वरूपम् ससत्त्वम्
कानः क्लीबो बधिर इति च ज्ञानकर्मेन्द्रियानाम् ।
तादात्म्येन व्यवहृतिरिह प्राणिनां गोचरत्वात्
सर्वे जीवाः करणमुखिनो नाधिकोऽहं तनो वै ॥ १११

नानाहं स्यां यदि तु करणं मे स्वरूपं बहुत्वात्
आमृत्यो वै जगति न तथा सत्यमेकात्मबोधात् ।
शब्दादीनां भवति करणं द्वारमेवोपलब्धेः
तान्येवाहं कथमुपरिचेदस्ति तेषां नियन्ता ॥ ११२

आत्मज्ञाने यदि न करणं स्यान्मनो मे स्वरूपम्
यत् सर्व्वासु प्रमितिषु मनो विद्यते सारभूतम् ।
चेतोजन्यं हि सुखमसुखं संस्कृती द्वे नराणाम्
ताभ्यां जीवो भवति सचज्ञो निश्चितं स्यां मनोऽहम् ॥११३

प्रत्याहाराग्ननु कथमहं स्यां मनो यन्नियम्यम्
द्रष्टा योऽहं मनस इह किं स स्वदृश्यं मनः स्यात् ।
दुःखानन्दौ यदि हि मनसो नो कुतो भोक्तृहीनौ
तस्मान्नाहं प्रकृतिषु मनः संशयाधार एव ॥ ११४

जीवाः सर्व्वे यत इह सदा सक्रिया लब्धसत्त्वाः
पञ्चप्राणे न तदुपशमे सम्भवेत् कापि वृत्तिः ।
क्षुत्तृष्णे स्तः सुविदिततया प्राणिनां प्राणधर्म्मौ
तस्मात् प्राणा अहमपि यत स्तत् स्थिते श्विचशान्तौ ॥ ११५

जीवत्वस्याथ यदि चलनं केवलं लक्षणं स्यात्
यानादीना मपि समतया जीवता किन्तु नैतत् ।
चैतन्येन प्रभवति सदा जीवता नैव सुप्तौ ।
ज्ञानाभाव स्तु चित इह तद्बोधकत्वे न सत्ता ॥ ११६

सत्त्वं प्राणा जडतनुधृतौ केवलं शक्तिमन्तः
काचित्तेषां न च जडतया विद्यते ज्ञानवृत्तिः
चैतन्यात्स्याऽप्युजनिततया नाशनायापिपासे
नाहं प्राणाश्चिति मयि यतः केवलं न क्रियैव ॥ ११७

ज्ञेये ज्ञानं जनयति यतो धी श्चिदाभासकत्वात्
सव्यापारा च हितमहिताद्या वरं निश्चिनोति ।
यत्प्रामाण्यं सकलविषये स्याद्विचारात्मिका या
चेतः प्राणा यदि च न ततो बुद्धिरेव त्वहं सा ॥ ११८

एका बुद्धिः किमपि न यतो वेत्ति सास्त्वात्मसत्त्वे
आत्माभावे न भवति पुनर्ज्ञानकर्त्र्येव यत् सा ।
आत्मा तस्याः परत उदितो भासकत्वाद्धियोऽतः
नाहं दृश्यं मतिरिह मयि द्रष्टरि स्त्वायमाने ॥ ११९

प्राणं ब्रह्म श्रुतिषु च मनो ब्रह्म यत्रैवमुक्तम्
विज्ञानं धा तदपि च तथा नाभिप्रैपां तदर्थः ।
एषां ब्रह्म श्रुतिषु कथने स्यात् स्वरूपार्थ एव
बुद्ध्यादीनामपरममति नाभिधार्थेऽत्र दोषः ॥ १२०

प्रत्यात्मं यत् पृथगवगतं स्वाभिमानप्रवृत्तेः
साहङ्कारो जगति सुदृढं ज्ञायते तेन जीवः ।
स्वल्पज्ञत्वादसकलतया मेऽपि चात्मा विशिष्टः
स्याहंवृत्त्या सततमविनाभाव आस्तां स्वरूपम् ॥ १२१

स्याहङ्कारं यदहमवरं वेद्मि तत्र स्वरूपम्
खण्डं दृश्यं भवति स सदा मेऽहमस्मीति बोधात् ।
दृश्यत्वेन स्फुरणरहितोऽपेक्षते चान्यसत्त्वम्
सोऽन्याधीन श्चिदव विमतो नो भवेन्मेऽत्र आत्मा ॥ १२२

एवं योऽत्र प्रविदिततया कत्र हङ्कार आस्ते
मिथ्या नूनं स भवति जडो नैव मे चित् स्वरूपः ।
खण्डत्वं यत् पृथगवगतं वस्तु किञ्चिन्न तस्मात्
पूर्णं शुद्धं परमवसितं ज्ञानमात्रं स्वरूपम् ॥ १२३

वैशिष्ट्येन त्वमहमिति यज्ज्ञायते जीवभेदः
चेतोवृत्तेः स चिदिव शुभां बुध्यते कार्य्यकारी ।
सत्यप्येवं स विदिततया वस्तु दृश्यञ्च नष्टम्
सम्बिन्मात्रं यदनुविदितं तद्धि सर्व्वस्वरूपम् ॥ १२४

देहादीनां तदहमवधे नास्ति चेदात्मसाम्यम्
कस्माद्ध्रूयः खलु ममतया क्षेत्रपुत्रार्थकान्ताः
यान्ति स्पष्टं पृथगवगता आत्मनो वा तदैक्यम्
आत्मैक्यार्थो न भवति कथा बाधभूतेषु तेषु ॥ १२५

एवं युक्त्या चिति मयि कृते सर्व्वकार्य्यापवादे
आत्मन्यस्मिन् चिद्परतया कल्पितानेकभावे ।
प्रत्यक्षोऽपि स्खलति सकलं विद्यते नैव किञ्चित्
आत्मज्ञाने भवति च ततः सत्यसिद्धान्त एषः ॥१२६

नाहङ्कारो न वपु न मनो नेन्द्रियं नापि बुद्धिः
न प्राणा नो तनु रथ न वा भूतवर्गो न जाग्रत् ।
न स्वप्नो नानवगति स्ततो नैव कर्त्ता न भोक्ता
ब्रह्मैकं सच्चिदमहमजं साक्षिचैतन्यमात्रम् ॥ १२७

स्वप्नाद्याप्ते भेष न च कथं स्वप्नजाग्रत्सुषुप्ति :
याथार्थ्यं तद्धि सहजतया चात्मनो वेदनाय ।
स्वावस्था स्ता अनियततया सात्मनो वर्त्तमाना:
तद्व्यावृत्तिः क्रियत अधुना तत्क्रियावर्णनेन ॥ १२८

जाग्रत्कालो विविधविषयेऽस्थायि यद्याति जीवं
स्थूलं विश्वं गमयति सदा केवलं नामरूपम् ।
येन स्वप्नो वहिरुपरतिं प्रापयत्येव तेषाम्
भावाः सर्वे यदनृततया नामरूपव्यवस्था ॥ १२९

चित्तस्पन्दाद् यदखिलगतं सूक्ष्मरूपं शरीरम्
तन्मेऽलीकं खलु तुलनया जाग्रतः सत्यरूपैः ।
स्वप्नावस्था विचलति यदा जाग्रदायाति चैवम्
नात्मद्वैधं विसदृशतया नित्यता नो तयोर्वै ॥ १३०

सामान्यं यच्च मन उभयोः स्यात् तदेव स्वरूपम्
आत्मास्तित्वे तदपि विलयं याति काले सुषुप्तौ ।
बीजाकाराखिलजननभूः शक्त्यविद्यात्मिका या
ज्ञाता नाहं किमपि तु सुखं सुप्त एवं विबोधात् ॥ १३१

ज्ञानाभावो विषयरहितः सोऽपि दीर्घं न युङ्क्ते
तत्रानन्दो वरमपि तथा बुध्यते प्राज्ञजीवैः ।
यस्मात् स्वापो न भवति सदा स्वप्नजाग्रत्प्रबाधात्
जीवावस्था अनियततया तिस्र एव स्वसत्त्वाः ॥ १३२

यात्यायात्यात्मनि न च सदातिष्ठतीति व्यवस्थाः
सर्व्वा एवं स्थितिपरतया दृश्यमाना अनित्याः ।
ता एकस्या स्तदपरतया चेत् परावर्त्तमानाः
व्यावर्त्तन्ते कथमपि सतो नात्मनः स्युः स्वरूपम् ॥ १३३

साहं चेतो यदि चलतया स्वप्नजाग्रत्सु नात्मा
अज्ञानन्तु प्रभवति समं यत्त्ववस्थासु मूलम् ।
अव्यक्तं तत् प्रवदति न वै वस्तु नावस्सनादि
को वा दोषो यदि भवति तत् कारणत्वात् स्वरूपम् ॥ १३४

ज्ञातेऽज्ञाने स्मरणमधुना येन सुप्तोत्थितस्य
तेनाज्ञानं न विदिततया स्यात्तदाभानकृचित् ।
दृष्टोत्पत्तौ भवतु चिति तत्तादृशं प्राग् यदुक्तम्
ज्ञाते तत्त्वे किमपि नहि तत् किं कथं मे स्वरूपम् ॥ १३५

जीवो जाग्रज्जगति विषयैः स्वात्मभावै र्यथास्ते  
स स्वप्नस्थ स्तदिव न पुनः स्वापग स्वप्नवन्तो।  
यद्येवं स्यात् कथमथ स ते चित्चलेष्वेषु नित्या  
मैकारूपा गमयति यदा तान् हि जीवस्वरूपम् ॥ १३६

तिस्रोऽवस्था अनियततया नाथ जीवस्वरूपम्  
किन्तु ज्ञानं यदविषयि ताः साक्षिरूपेन वेत्ति।  
यन्नो भिन्ते स्थितमविरतं नापि हीनं कदाचित्  
तेनात्मा तन्न भवति कथं ह्यध्रुवेषु ध्रुवं यत् ॥ १३७

ज्ञाताऽज्ञानः स्फुरणजनितो यो न कर्त्ता तु साक्षी  
सोऽहं सत्यः जगदुपशमं स्वप्रकाशश्च नित्यम् ।  
सम्बिन्मात्रं विषयरहितन्तु त्र्यवस्थाविकाशि  
प्रामाण्येनाद्वयमविकृतं तत्तुरीयं ध्रुवं स्याम् ॥ १३८

नोपादेयग्रहणमथवा हेयदानं ध्रुवे स्यात्  
निःश्रेयो यद्ध नियततया स द्वयो र्वर्जितत्वात् ।  
चिद्भावत्वं परमुपगतं यद् ग्रहीतृश्च हातुः  
आत्मैवास्तां नियतमथ मे तद्धि सर्व्वापवादे ॥ १३९

ज्ञानाज्ञाने विषमविमते जातु नैकं परे यत्
आत्माज्ञाने युगपदिह वै तत् कथं स्याद् प्रमाणम् ।
वस्त्वज्ञानं किमपि नहि तत्र द्वयोः स्याद् विरोधः
तादृङ् मिथ्या किमपि सति चेत् सृष्टये तेन किं स्यात् ॥ १४०

नामाज्ञानं स्वत इह न यद् विद्यते कार्य्यकारि
वस्त्वज्ञानं तदपि न नृणां निर्विशेषा त्वविद्या ।
तत्त्वाज्ञानास्फुरणजनितं दृश्यते केवलं तत्
ज्ञाते तत्त्वे किमपि न भवेदात्मनि प्राङ्मृषाभाव् ॥ १४१

जीवेऽविद्या तदवशगता त्वीश्वरे सेच्छया सा
सृष्टा माया बहुविकरणे वस्तु नो सा विवेके ।
नैवं सत्त्वं भवदपि ततोऽनन्तमज्ञानमास्ते
ज्ञानी तन्नो किमपि मनुते स्वात्ममायां तथेशः ॥ १४२

नातोऽज्ञानं न तदुपगतं वस्तु किञ्चित् सतोऽन्यत्
किन्तूपाधि स्तदखिलमसन्नामरूपात्मकं वै ।
सत् सत्यत्वं चिरमविकृतं तेन विद्यात् विवेकी
सर्व्वस्यैवं श्रुतिरपि तथा ज्ञापयत्येव तत्त्वम् ॥ १४३

यन्मां मृत्योरमृतमपरं वासतो मां सदेक
धा मां ज्योतिर्गमय तमसश्चेति वेदान्तवाक्यम्।
जीवस्यैवं सदवगतये प्रार्थनायाञ्च सत्याम्
सद्वस्तुत्वं कलयति ततोऽसत्समो मृत्युरन्यत् ॥ १४४

अन्नादेर्यत् परत उदितं पञ्चकोषादिमुक्तम्
सन्मात्रं तद्रचयितृ पुनः कारणत्वेन विश्वम्।
तादृक् सत्यं गमयति दृढं ब्रह्मपुच्छा प्रतिष्ठा
नन्दं विद्वान् ह्यभयमयते ब्रह्मण स्तैत्तिरीये ॥ १४५

ब्रह्मैवात्मा स भवति च यो ब्रह्म वेदापरोक्षम्
ज्ञानान्मोक्षोऽनुभवति यत स्तं विदित्वातिमृत्युम्।
नान्यः पन्था श्रमगतये विद्यते चायनाय
ज्ञानं ह्येवं श्रुतिभिरसकृज्ज्ञायते कर्म्मशेषम् ॥ १४६

एवं ज्ञाने हृदयनहनं भिद्यते ज्ञानिनोऽथ
छिद्यन्ते वा अपगततया संशया स्तेन सर्व्वे।
क्षीयन्तेऽस्य प्रविदिततया सर्व्वकर्म्माणि सत्यम्
मोक्षस्तेनामृतफलमिदं सम्विदो वेदमानम् ॥ १४७

कस्त्वं भूयः श्रुतिगुरुकृतान्नेति बुद्धिप्रभावात्
नष्टेऽज्ञाने त्वमसि दशम स्तद्वदात्मप्रकाशः।
स्वव्यक्तोऽपि स्फुरति झटिति ध्यायतः सत्स्वरूपम्
एवं मोक्षो नियतविदितः स्वात्मबोधो यथार्थम् ॥ १४८

कर्त्राथासै रसकृदपि नो जायते कर्तृहा स।
किन्त्वव्यक्तात् किमपि स विना कारणात् सेव्यते वै।
तेनानित्यो न भवति स नो वा क्रियासाध्य एव
दृश्यत्वेन स्फुटति स मते कर्त्तरि ज्ञानरूपः ॥ १४९

नोत्पाद्योऽतः स नियततया नो विकार्यश्च नाप्यः
संस्कार्यो नो अविषयतया च क्रियाया यतः सः।
मिथ्याविज्ञापटनिरसनात्तत्प्रकाशः स्थितोऽपि
स्पष्टं जीव भवति सततं तस्य तादृग् विशेषः ॥ १५०

शुद्धज्ञाने क स इह यतो बन्धनं यस्य मुक्तिः
तस्यैवस्यादिति विनियमस्तेन जीवस्य मोक्षः ।
एवं जीवे किमपि न चित श्चित् प्रकृत्या चिदेव
ज्ञानोन्मेपे न किमपि ततः कस्य वा बन्धमोक्षौ ॥ १५२

सूर्य्यो यादृग् दिनकरतया सर्व्वलोकस्य चक्षुः
अस्पृष्टःसन् न नयनगतैर्लिप्यते बाह्यदोषैः ।
शुद्धज्ञानं तदिह च परं सर्व्वभूतान्तरात्मा
तिष्ठद् मुक्तं न भवति तथा जैवबन्धादिदोषैः ॥ १५३

नान्तर्भूते सवितरि यथा दर्पने विम्बितेऽत्र
तच्छायाया द्युतिजनकता विद्यतेऽसत्प्रकृत्याः ।
चित्याभासे स्थित इह जडे कर्म्मकर्त्तृत्वमन्यद्
वा ज्ञातृत्वं किमपि न तथा चैव वाध्येत जीवे ॥ १५४

कायादीनामवरविषय स्तेन जाड्यश्च मानम्
श्रुत्युक्तावथ न पुरुषाद् वै परं किञ्चिदस्ति ।
सा काष्ठा सा च परमगति र्यत्र जीवेशसाम्यम्
तादृग् बोधः समरसतया चेद्वयोः स्याद् विमोक्षः ॥ १५५

भेदो नूनं विषयजनितो भाति जीवेशयो र्वै
प्रापत्र स्वल्पं विषयमखिलं वा तयो र्भेद एवम् ।
सत्तामात्रे यदुभयसमे नास्ति भेदावकाशः
सत्ता सत्यं पृथगतिशयो यन्मृषा नोपलब्धेः ॥ १५६

नामाकृत्योः पृथगकरणे ते कथं वा स्वतन्त्रे
यस्मिन् सत्त्वे रचित इव ते ज्ञायते वै स तत्त्वम् ।
एवं न स्युः सत इह पृथग् जीवभावा विशेषाः
सन्मात्रोऽहं न विकृतिरतो नामरूपानि नाना ॥ १५७

तत्त्वज्ञानं सदनतिशयं मोक्ष एवानुभूतम्
तद्भासा यद् विदितममृतं शून्यजीवप्रयत्नम् ।
ज्ञेयज्ञानं न यदनियतं किन्त्वविद्यापहन्तृ
शुद्धं सत्यं तदहमजडं ज्ञानमात्रं स्वरूपम् ॥ १५८

चित्तेदेवं भवति च तथानन्द एवाप्रकारः
भोक्त्रानन्दो विषयजनितो नो स आनन्दमात्रम् ।
तात्पर्य्यार्थः स खलु विहित स्तज्जलानागमोक्तेः
स्वारूप्येनाहमपि स रसः सच्चिदानन्दरूपः ॥ १५९

भिन्नार्थास्ता स्तु वहिरभिधाः शब्दजा जानतेऽज्ञाः
तासां नैष प्रकृत उचित स्तु स्वरूपार्थ एकः।
तत्त्वार्थं यं श्रयति मननात् स्वात्मसाम्येन विद्वान्
तेनाज्ञानात् समुदिततया शान्तिमाप्नोति पूर्णाम् ॥ १६०

स्वात्मोन्मेषोऽनुपहिततया मोक्ष एवं विचारात्
तत्प्राप्तौ वा कथमिह पुनः कर्त्तृकर्म्मादियोगः।
प्रामाण्यं स्यादवगमवतां भाक्तनोऽन्तुकार्य्यं
जीवन्मुक्ति र्न भवति ततो यद् विरोधप्रयोगात् ॥ १६१

कैवल्यन्तु प्रकृतममृतं नामतो यद् विदेहम्
तत्त्वीभूतं परिलयगतं साक्षिचैतन्यमात्रम्।
सम्यङ्नाशाद् व्यवहृतिपरं नेह बुद्ध्यादि सर्व्वम्
मुक्तस्यातः कथमपि जगद्दर्शनं सम्भवेन्नो ॥ १६२

ज्ञानान्मोक्षः सपदि विदुषो जीवभावोऽथ मिथ्या
तत्प्रारब्धं यदनृततया भोग्यमेवानृताङ्गैः।
मुह्यन् ज्ञानी सदसदखिलं कर्म्म धत्ते यथास्वम्
एवं ज्ञाने फलति च फले कर्म्मणो नास्ति बाधः ॥ १६३

पूर्व्वं ज्ञानात्तत इह परं सञ्चितागामिकार्य्यम्
तत्त्वज्ञानं तदुभयविधं नाशयत्येव सत्यम्।
प्रारब्धं द्राक् स्वनुभवमनु ज्ञानिनः क्षीयते नो
भोगैर्यस्य स्यात् उपशमो बाणवद् वेगशेषात्॥ १६४

जीवस्य द्राग् विलयमखिलं याति बोधक्षणेन
संस्कारात्पं ह्यनृतमपि तन्नास्ति चेत् सम्विदन्त्यम्।
एको मुक्तो भवति च ततः शासितुर्वाग्भावात्
नैवं ज्ञानी विचरति भवे यावदारब्धकर्म्म॥ १६५

वाक्यज् ज्ञानं प्रभवति यहो जीवता ज्ञानिनोक्तात्
व्यासादीनां व्यवहृतिरिह ज्ञायते पूर्व्वमेवम्।
मिथ्याप्रत्नं भवतु सकलं ज्ञानमात्रन्तु सत्यम्
शुद्धो विद्वान् विचरति यथाप्राप्तसंस्कारलेशम्॥ १६६

ज्ञानात् पश्चादपि यदि यथापूर्व्वदेहादि सर्व्वम्
दुःखं तादृक् च भवति तदा ज्ञानमात्रेन कोऽर्थः।
ज्ञानं ह्यात्मा तदितरमसच्चिश्चिनोत्येव विद्वान्
तस्माद् दुःखं क खलु विदुषो वा क देहादि सर्व्वम्॥ १६७

सर्व्वाभावो जड़परिणति मृतुप्रतुल्या न मुक्तिः
सम्बिद्रूपा विलसति सदा सा यथार्थात्मबोधात् ।
जीवोपाधिः स भवतु न वा ज्ञानिन स्तेन नार्थः
नाभामाण्य स्वथ यदि स वा पूर्व्वस स्कारदृष्टः ॥ १६८

मिथ्यात्वेन ध्वनति यदिदं किञ्च सर्व्वं तदास्ताम्
तेन स्पृष्टं न यदवितथं ज्ञानमात्रं स्वरूपम् ।
ज्ञानेनैव विचरति बुधः सर्व्वकार्य्ये प्वसक्तः
जाग्रत्यत्रैव स्फुरति सततं स्वप्रकाशस्वरूपे ॥ १६९

दग्धीभूते भ्रमविजनिते कर्त्तरि ज्ञानदीप्त्या
सर्व्वं कुर्व्वन् किमपि न कृतं वस्तुत स्तन्मया वै ।
कर्म्म प्येवं न हितमहितं ज्ञानिनो वास्ति किञ्चित्
कर्म्माभ्यासान्न भवति तथा बद्धमूलस्य कर्त्तुः ॥ १७०

स्वेच्छाचारी यदि न नियमो जायते तेन विद्वान्
चिन्मूढानां तदनुकरणात् स्यान्न लोकव्यवस्था ।
ज्ञानी जानन् सकलमनृतं लोकशिक्षार्थमेव
न्यायं कुर्व्वन् खलु परिहरन्नाहितं प्राय आस्ते ॥ १७१

स्वात्मोन्मेषे सुकृति वशतः कस्यचित् सत्यपि द्राक्
प्रारब्धोत्थं विषमचरणं दृश्यते तीव्रवेगात् ।
कर्म्मासैवं सदसदुभयामङ्गलज्ञापनार्थं
सत्यज्ञाने तदनुकरणे नैव जीवः समर्थः ॥ १७२

दुःखं मोहो रजसि तमसि, स्वस्ति यद्यापि सत्त्वे
सम्यक् कस्मिन्नपि न शमता राजते तद् गुणानाम् ।
मिथ्यापन्नान् त्रिगुणविषयान् नात्मसाम्येन बुद्ध्वा
निस्त्रैगुण्यः सदनुभविता तत्फलेषु ह्युदास्ते ॥ १७३

कर्म्म ज्ञानात् परमपि यथा ब्राह्मन स्तं विदित्वा
प्रज्ञां कुर्य्याद् विदुष उदितं तत्त्वचिन्तात्मकं यत् ।
जैवं कर्म्म स्पृशति न च तज् ज्ञानमात्रं स्वरूपम्
जीवं धृत्वा तदमृतमतिः कर्म्मिणो नो कदाचित् ॥ १७४

जीवन्मुक्त स्थितिरवगता चानया वेदवाचा
नास्या मानं विधिपरतया सम्विदोऽकृत्रिमत्वात् ।
जीवन्मुक्ते रतिशयसुखास्वादनायैवमुक्ता
सत्तोत्कर्षं न भजति ततः सर्व्वसाम्यात्मकत्वात ॥ १७५

देहादौ प्राक् सदनवगते रात्मबोधो यथासीत्
तत्त्वज्ञानादथ सति तथा निश्चयात्मप्रतीतिः ।
येन ज्ञानी किमपि मनुते नात्मनोऽज्ञानकार्य्यम्
जीवेऽध्यास्यां त्यजति वितथे कर्त्त रि क्लेशमूले ॥ १७६

जीवे ज्ञानं भवदपि भवेन्नो स आत्मस्वरूपम्
किन्तु ज्ञानं तमपि कुरुते दग्धबीजञ्च नष्टम् ।
जीवन्मुक्तस्थितिरपि मृषा तेन वै सम्विदन्तम्
कार्य्याकार्य्यं किमपि मनुते नो बुध श्चित्प्रतिष्ठः ॥ १७७

यज्जीवत्वं तदपि न सतः कारणाद्भिन्नरूपम्
नैवास्यातः क्षय उत लयोऽज्ञानमात्राश्रयित्वात् ।
जीवोपाधि र्न सदतिशयो बुध्यते ज्ञानिनैवम्
स्वः सत्तावानिव न नियतः सम्विदैवास्य नाशात् ॥ १७८

जीवो ज्ञानात् परमपि च यो दृश्यतेऽज्ञानिदृष्ट्या
ज्ञानी नो वै तमनृतमयं पश्यति ज्ञानहेतोः ।
मोक्षे तस्यापि लय इति चेद्भिन्नकल्पोऽमृतेः
स भाष्येत स्वत उपशमं कारणे सत्स्वरूपे ॥ १७९

नद्यो भिन्नाः सुविदिततया स्यन्दमाना यथाब्धौ
गच्छन्त्यस्तं त्वविदिततया नामरूपे विहाय ।
विद्वान् सत्यं परमनुभवन् नामरूपाद् विमुक्तः
सर्व्वात्मानं परमपुरुषं ऊति दिव्यं तथैव ॥ १८०

कार्य्यं यद् यद् यत उदयि तत्तल्लयं याति तस्मिन्
कार्य्यात्मान स्तुगुणविगुणाः कारणं न स्पृशन्ति ।
जीवस्यैवं विलयविषये कारणे कार्य्यनाशम्
प्राप्य ज्ञानी सकलविरतेः सद्य सम्पद्यते वै ॥ १८१

दृष्टोऽपाये जगति नियमः कारणे कार्य्यनाशः
एवं न्यायाद् यदि च विलयः स्यात् स्वभावेन हेतौ ।
ब्रह्मण्यायात् स्वत उपशमं कारणे कार्य्यजीवः
ज्ञानेनार्थो न हि चितिमतां नाशमूलेन तेन ॥ १८२

जीवेऽज्ञानं तदुपजनिता संस्कृतिः खल्वनादिः
तत्स्वेनेतं न भवति विना सम्विदं सत्प्रकाशाम् ।
नो वस्तूनां लय इव भवेद्धेतुकार्य्यन्याय एव
दृष्टे कार्य्ये यद्विकरणे मायया सत्यकार्य्ये ॥ १८३

अब्धुत्पन्नाः पृथगिव यथा घूर्णिकल्लोलफेनाः
नाम्भो भिन्ना ननु विकृतयोऽवस्तव स्तत्त्वत स्वे ।
नानारूपः सदुपरि तथा भासमानोऽपि जीवः
सद्भिन्नस्ते किमपि न स सद् वै ततस्ताद्विकार्थः ॥ १८४

नामाकारौ न च सह सता नो ततः स्तः पृथग्वा
सत्तामात्रं सत उपगतं नामरूपानृतत्वात् ।
रूपास्तित्वे न सदनुमिति र्भाति सत्येव रूपम्
यद्दृष्टान्तश्रुतिरिह यथा प्राक् सदेवेदमासीत् ॥ १८५

सृष्टेरादौ सदिदमखिलं दृश्यमानं यथासीत्
मप्येतर्ह्येवं यदनृततया नामरूपव्यवस्था ।
सद् वै सत्यं किमपरमथ प्रापनीयं तथान्ते
जीवस्यातः परममयनं केवलं सत्स्वरूपम् ॥ १८६

जीवो भिन्नः सदुपरि यतो बाध्यतो दृश्यमानः
तेन स्पृष्टं स्वविकृततया मेति सत् तद् विशेषम् ।
यादृक् क्षीरे दधि परिणतं गन्यते नो पयोवत्
तादृग् जीवो भवदपि कथं श्रीयते केवलं सत् ॥ १८७

सत्स्याज्जीवो न परिणमनान्मायया दृष्टमेवम्
नातः स्पृष्टं न च विकृतिमत् सद्धि तज्जीवभावैः ।
सन्नित्यं सत् न सत इतरैरन्यथाभाव एव
सद्वस्तूनामिव परिणतिं तेन नाप्नोति सत्यम् ॥ १८८

वस्तूनां सा खलु परिणति र्यत्प्रकृत्यान्यथात्वम्
जाड्ये सा तु प्रभवति न सत्कारणे कार्य्यसृष्टौ ।
कार्य्यापत्ति र्यदसमविधा वस्तुनः सा विवर्त्तः
सोऽसम्बन्धं रचयति सतः सृष्टिमूलस्य भेदैः ॥ १८९

यादृग् दृष्टे कनकवलये तत्त्वमेकं सुवर्णम्
नास्याकारो यदुपरचित स्तिष्ठति स्वात्मनैव ।
तादृग् विश्वं सति न रचितं यद् विवर्त्तात्मकन्तु
नानारूपं स्थितमपि परं ब्रह्म सत्तात्त्वमस्य ॥ १९०

कार्य्यं सर्व्वं बहिरवगतं केवलं नामरूपम्
यत्स्वस्थित्या ह्यसदपि मृषा कारणे भासमानम् ।
जिज्ञासून् सच्छ्रुतिरपि तथा ज्ञापयत्येव तत्त्वम्
कार्य्यं मिथ्या जगदवितथं यत्सता कारणेन ॥ १९१

नानाकारं चिदचिदखिलं भ्रान्तं विश्वमेतत्
मायासृष्टिः सदुपरि यतो यैवमाभासमाना ।
तेनैकान्तं नहि जगदसत् किन्तु संचास्यतत्त्वम्
कार्य्यं मिथ्या जगदवितथं तत् सताकारणेन ॥ १९१

साधिष्ठानं स्फुरति सकलं नैव मायाप्रमूला
मायारूपं जगदपि तथा दृश्यमानं सतैव ।
तेनात्यन्तं जगदिदमसन्नो खपुष्पञ्च यादृक्
कार्य्याकारेऽसति जगति सत् कारण न्तस्य सत्यम्

विश्वं जीवात् प्रभृति निखिलं कार्य्यभूतं ह्युपाधिः
सत्ता यस्य प्रकृतत इह ज्ञायते नो सतोऽन्या ।
मिथ्यारूपं हि सदतिशयं वेत्ति किञ्चिद् यदज्ञः
नान्यत्तत्त्वं किमपि न ततो विद्यते वस्तुभूतम् ॥ १९४

नानारूपं यदिदमुपरि ज्ञायमानं जगत्याः
अस्मातत्त्रात् कथमपि न सत् तत् सदाभासमेव ।
एवं सत्ये प्रकृतिविकृती द्वे मृषा भासमाने
सन्मात्रत्वं परमवसितं तत्त्वमेकं बुधानाम् ॥ १९५